देवसेनासहस्राणि सरथानि महाहवे । तस्य बाणपथं प्राप्य नाभ्यवर्त्तन्त सर्व्वशः ।
प्रणेदुः सर्व्वभूतानि बभूवुस्तिमिरा दिशः । देवानामजयश्चैव प्रत्यदृश्यत दारुणः ।
अंशस्तु दानवेन्द्रस्य जघानोत्तमविक्रमः । अनीकं दशसाहस्रं कुञ्जराणां तरस्विनां ।
आपतन्तं गजानीकं कुजम्भो वीक्ष्य दानवः । गदापाणिरवारोहद्रथोपस्थादरिन्दमः ।
अद्रिसारमयीं गुर्व्वीं प्रगृह्य महतीं गदां । अभ्यद्रवद्गजानीकं व्यादितास्य इवान्तकः ।
स गजान् गदया निघ्नन् व्यचरत् समरे बली । कुजम्भो दानवश्रेष्ठो दण्डपाणिरिवान्तकः ।
विशीर्णदन्तांश्च बहून् भिन्नकुम्भांश्च वारणान् । अकरोद्दानवश्रेष्ठ उद्दिश्योद्दिश्य तान् बली ।
विशीर्णदन्ता बहवो भिन्नकुम्भास्तथाऽपरे । कुजम्भेनार्द्दिता नागा व्यद्रवन्त दिशो दश ।
कुजम्भस्य च येऽमात्या दानवा घोरदर्शनाः । नाराचैर्विमलैस्तीक्ष्णैरभ्यघ्नन् गजयोधिनः ।
क्षुरैः क्षुरप्रैर्भल्लैश्च दात्रैरञ्जलिकैस्तथा । चिच्छेद चोत्तमाङ्गानि कुजम्भो दानवोत्तमः ।
शिरोभिः प्रपतद्भिश्च गगनं समपूर्य्यत । अश्मवृष्टिरिवाभाति बाहुभिश्च महाद्रुमैः ।
हस्त्युत्तमाङ्गाः स्कन्धेषु गजानां गजयोधिनः । अदृश्यन्त महाराज ताला विशिरसो यथा ।
आपतन्तं महानागमंशस्त्वासुरसत्तमः । विव्याधैकेषुणा क्रुद्धस्ततः स विमुखोऽभवत् ।
विगाह्यैवं गजानीकं कुजम्भो दानवोत्तमः । विनिघ्नन् प्रवरान् सैन्यान् गदया गदिनाम्वरः ।
एकप्रहाराभिहतान् कुजम्भेन महागजान् । अपश्यन्त सुराः सर्व्वे पर्व्वतानिव पातितान् ।
कुजम्भस्य च मार्गेषु विशीर्णास्ते महागजाः । वज्राहता इवेन्द्रेण विशीर्णा इव पर्व्वताः ।
अमन्यन्त सुरास्तञ्च मूर्त्तिमन्तमिवान्तकं । गन्धादेव व्यशीर्य्यन्त सिंहस्येवेतरे मृगाः ।
स शायसीं गदां विभ्रदुक्षितां जगशोणितैः । व्यादितास्यो नदन् क्रुद्धो रौद्रं रूपमधारयत् ।
यथा हि भगवान् क्रुद्धः प्रजानां संक्षये पुरा । प्रक्रीडमानो गदया रणमध्ये महासुरः ।
गोपाल इव दण्डेन कालयत् स महागजान् । क्रुद्धं कालमिवाकाशे दण्डमुद्यम्य दानवं ।
अपश्यन्त सुराः सर्व्वे कुजम्भं भीमविक्रमं । हतारोहास्तु तत्रान्ये प्रभिन्ना वारणोत्तमाः ।
गदया हन्यमानाश्च बाणैश्च भृशविक्षताः । असहन्तः कुजम्भस्य गदावेगं महाहवे ।
स्वान्यनीकानि मृद्नन्तः प्राद्रवन्त महागजाः । महावात इवाभ्राणि विधम्य गदया गजान् ।
अतिष्ठत् समरे दैत्यः कालः संवर्त्तको यथा ।

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि वामने देवासुरयुद्धे सप्तचत्वारिंशदधिकद्विशततोऽध्यायः ॥२४७॥

॥ वैशम्पायन उवाच ॥ ततः सर्व्वाणि सैन्यानि देवराजस्य शासनात् । अभ्यद्रवन्त दितिजान्नदतो भैरवान्रवान् ।
तं बलौघमपर्य्यन्तं देवानां सुदुरासदं । रथनागाश्वकलिलं मत्तदुन्दुभिनादितं ।
आपतन्तं सुदुष्पारं रजसा सर्व्वतो वृतं । दैत्यसागरमक्षोभ्यं समुद्रमिव पर्व्वणि ।
तदाश्चर्य्यमपर्य्यन्तमसह्यमिवाद्भुतं । रथनागाश्वकलिलं समुदीर्णं महाबलं ।
आवार्य्य तरसा सर्व्वं कुजम्भो बलिनाम्वरः । अतिष्ठत् समरे दैत्यो गिरिर्मेरुरिवाचलः ।

अनीकानि कुजम्भस्तु गदया संन्यवारयत्। अनीकिनी कुजम्भेन वारिताऽभून्निरुद्यमा। ११११६
तस्मिंस्तथावर्त्तमाने संप्रहारे सुदारुणे। तेषान्तु संप्रहारे वै वर्त्तमाने महात्मनां।
असिलोमा हरिश्चैव जघ्नतुर्व्वै परस्परं। असिलोमा तु बलवान् संक्रुद्धो दानवाधिपः।
देवसैन्यस्य सर्व्वस्य धूमकेतुरिवोत्थितः। तमांस्यर्क इवापोहत् सुरसैन्यानि संयुगे।
सहस्ररश्मिप्रतिमो दानवस्य रथोत्तमः। शरैर्मेघ इवावर्षत् देवानीके प्रतापवान्।
शरौघैरश्मिभिर्दीप्तैः प्रतपन् घोरदर्शनः। रौद्रः क्रूरो दुराधर्षो दुर्व्वार्य्यो ज्वलितोमुखे। १११२०
युध्यते हरिणा सार्द्धं ग्रसमान इव प्रभुः। उग्रेयुरुग्रवदनो मृद्नमानो महागजान्।
सुराणामुत्तमाङ्गानि प्राचिनोत् सुमहाबलः। ग्रसमानः स सैन्यानि शरदंष्ट्रः प्रतापवान्।
अग्निजिह्वो दुराधर्षस्त्वापव्यात्ताननोऽसुरः। परश्वधधरः श्रीमान् मृदङ्गापूरितध्वनिः।
अतिष्ठद्दानवव्याघ्रः संयुगे व्याघ्रवद्बली। मौर्व्वीघोषस्तनयित्नुः पृषत्कपृषतो महान्।
धनुर्विद्युद्गुणाटोपो महामेघ इवापरः। बलौघसागरो घोरो बाहुग्राहो दुरासदः। १११२५
कार्मुकोर्मितरङ्गौघो बाणावर्त्तमहाह्रदः। गदासिमकरो रौद्रो ज्वाबेला विमर्योद्भूतः।
नाराचमीनः सुमहान् गर्ज्जितोत्क्रुष्टघोषवान्। हयान् गजान् पदातांश्च रथांश्च तरसैव सहन्।
न्यमज्जयत संग्रामे परवीरान् शरासारान्। अप्लावयत्स देवौघान् दारुणो दानवेश्वरः।
प्रामर्द्दत युधि श्रीमान्दैत्यश्रेष्ठो महाबलः। अपश्यंस्त्रिदशाः सर्व्वे शृङ्गजाम्बूनदप्रभं।
सन्नद्धं तच युध्यन्तं ज्वलन्तमिव पावकं। मध्यन्दिनगतं सूर्य्यं तपन्तमिव तेजसा। १११३०
न शेकुः सर्व्वसैन्यानि दानवं प्रसमीक्षितुं। यथा प्रवृद्धो घर्मान्ते दहेत्कक्षं हुताशनः।
तथा सुरवरान्दैत्यो दहति स्म स्वतेजसा। देवानां दानवानाञ्च बलं नर्द्दति दारुणं।
विमूढमभवत्सर्व्वमाकुलञ्च समन्ततः। तत शूरा बलोदग्रा हस्त्यश्वरथधूर्गताः।
आर्य्यां बुद्धिं समास्थाय न त्यजन्ति महाहवं। तदुत्पिञ्जलकं युद्धमभवद्रोमहर्षणं।
देवदानवयोर्घोरं रुधिरस्रावकर्द्दमं। न दिशः संप्रजानन्ति भयत्रासनिपीडिताः। १११३५
शस्त्रघातांश्च विविधान्दानवानां महारणे। अन्योन्यं मूढचित्तास्ते निजमूर्च्छाकुलीकृताः।
स्वान् परान्नाभ्यजानन्त विमूढाः शस्त्रतेजसा। शिरोरुहेषु संगृह्य कश्चिच्छूरस्य संयुगे।
शूरस्छिन्दन्ति मूर्द्धानं सन्दष्टौष्ठपुटाननं। बाहुभिर्मुष्टिभिश्चैव वज्रकल्पैः सुदारुणैः।
प्रहरन्ति रणे वीरा न्यस्तशस्त्राः परस्परं। योधप्राणहरे रौद्रे स्वर्गद्वारविघट्टने।
सङ्कुले तुमुले युद्धे वर्त्तमाने भयावहे। हयो हयं गजो नागं वीरो वीरं महाहवे। १११४०
अभिदुद्राव वेगेन न्यहनच्चैवमन्तिकात्। असुराश्च सुराश्चैव विक्रमाढ्या महारथाः।
उत्सृजन्तो रणे प्राणान्निजघ्नुरितरेतरं। मुक्तकेशा विकवचा विरथाश्छिन्नकार्मुकाः।
हस्तैः पादैरयुध्यन्त दानवास्त्रिदशैः सह। हरिस्तु निशितं भल्लं प्रेषयामास संयुगे।
स तस्य धनुषः कोटिं छित्त्वा भूमावपातयत्। पुनश्चापि पृषत्कानां शतानि नतपर्व्वणां।

प्राहिणोत्सहसा तस्य दानवेन्द्रस्य संयुगे । तस्य देहे विमुक्तास्ते मारुतेन समीरिताः । १११६५
मग्नार्द्धकाया विबभुः पन्नगा इव पर्व्वते । स तैर्निपातितैर्गात्रैः चरद्भिरसृगव्ययं ।
बभौ दैत्यो महाबाहुर्मेघोद्गारमिवोत्सृजन् । ततोऽसिलोमा संक्रुद्धः प्रगृह्यान्यन्महद्धनुः ।
रुक्मपुङ्खांश्च निशितान् प्रेषयामास सायकान् । तैस्तं मर्म्मसु विव्याध सर्पानलविषोपमैः ।
गात्रं सञ्छादयामास महाभ्रैरिव पर्व्वतं । भूयः सन्धाय स शरं सुमोचान्तकसन्निभं ।
सुपुङ्खं सूर्य्यसङ्काशं वाणमप्रतिमं रणे । तेन विद्धः स वाणेन संयुगे भीमकर्म्मणा । १११७०
मुमोह सहसा देवो भूमौ च निपपात ह । ततो हाहाकृतं सर्व्वं देवे भूतलमाश्रिते ।
जगत्सदेवमाविग्नं यथार्कपतने तथा । परिवारांस्तु समरे जघानास्य महासुरः ।
एकत्रिंशत्सहस्राणि योधानां दानवोत्तम । जयश्रिया सेव्यमानो दीप्यमान इवानलः ।
प्रगृह्य कार्म्मुकं घोरं गतः शक्ररथं प्रति । तत्रैव तु महायुद्धे ससैन्यावश्विनावुभौ ।
प्रयुद्धौ सह वृत्रेण बलिना देवतारिणा । वाणखड्गधनुष्पाणिः समरे त्यक्तजीवितः । १११७५
आसाद्य सोऽश्विनौ वृत्रः स्थितो गिरिरिवाचलः । ततः शङ्खमुपाध्माय द्विषतां लोमहर्षणं ।
ज्याघोषतलनिर्घोषैः सर्व्वभूतान्यमोहयत् । ततः संहृष्टरोमाणः शङ्खशब्दं विशुश्रुवुः ।
सचराचरदेवौघास्त्रस्ताः सर्व्वमसत्वनं । गदापरिघनिस्त्रिंशशक्तिशूलपरश्वधाः ।
प्रगृहीता व्यराजन्त सचराचरबाहुभिः । तैः प्रमुक्तान्महाकायैः शूलशक्तिपरश्वधान् ।
भल्लैर्वृत्रः प्रचिच्छेद भीमवृत्रगरवेलया । सोऽन्तरीक्षचराणाञ्च भूमिष्ठानाञ्च गर्ज्जतां । १११८०
शरैर्विव्याध गात्राणि देवानां प्रियदर्शनः । वृत्रासुरभुजोत्सृष्टैर्वज्रभिर्वैरवचर्पां ।
निकृत्तान्येव दृश्यन्ते शरीराणि शिरांसि च । अथ रक्तमहावृष्टिरभ्यवर्षत मेदिनी ।
गदापरिघभिन्नानां देवानां गात्रसम्भवा । प्रच्छाद्यमानं देवौघैर्वृत्रं भीमपराक्रमं ।
ददृशुः सर्व्वभूतानि सूर्य्यमभ्रगणैरिव । स रश्मिभिरिवादित्यः प्रतपन् सर्व्वदेवताः ।
अविध्यद्बलवान् क्रुद्धः सायकैर्मर्म्मभेदिभिः । नदतो विविधान्नादानर्द्दितस्यापि सायकैः । १११८५
न मोहमसुरेन्द्रस्य ददृशुस्त्रिदशा रणे । तेऽसिशक्तिगदाभिश्च परिघप्रासतोमरैः ।
परश्वधैस्त्रिशूलैश्च प्रववर्षुर्महारयाः । ततो वृत्रः सुसंक्रुद्धस्तदाऽभ्यर्द्दितो बली ।
अभ्यवर्षच्छरैर्वीरस्तान् सर्व्वान् सत्यविक्रमः । ते वै विप्रकृता देवा विप्रकीर्णमहायुधाः ।
घोरमार्त्तस्वरं चक्रुर्वृत्रासुरभयार्द्दिताः । उत्सृज्य ते गदाशक्तिशूलासिपरशून् रणे ।
उत्तरां दिशमाजग्मुस्त्वरिता दृढधन्वना । ततः शूलगदापाणिर्व्यूढोरस्को महाभुजः । १११९०
प्रावल्गत रणे दैत्यस्त्रासयन् सचराचरं । तत्रैकस्तु महाबाहुरग्नी शूलधरः प्रभुः ।
अभ्यधावत दैत्येन्द्रं वृत्रमप्रतिमं रणे । गृहीतचापो वेगेन प्रभिन्न इव वारणः ।
वक्त्रदन्तैस्त्रिभिः पार्श्वे विव्याधासुरसत्तमं । सोऽतिविद्धो महेष्वासो वृत्रः परमकोपनः ।
गदां जग्राह बलवान् गदायुद्धविशारदः । तां प्रगृह्य गदां भीमामद्रिसारमयीं दृढां ।

अश्विनं सहसागम्य ताडयामास वीर्य्यवान्। दीप्यमानं ततः शूलमश्वी सुविपुलं दृढं। ११९९५
प्राहिणोद्वृत्रदैत्याय समरे लोमहर्षणं। भङ्क्त्वा शूलं गदाग्रेण गदायुद्धविशारदः।
अश्विनं सहसाऽभ्यर्च्छद्गरुत्मानिव पन्नगं। सोऽन्तरीक्षं समुत्पत्य विधूय महतीं गदां।
नासत्योरसि चिक्षेप गिरिशृङ्गोपमां बली। गदयाऽभिहतोऽथाश्वी त्यक्त्वा शूलमनुत्तमं।
प्रययौ सहसा तत्र यत्रायुध्यत वासवः। पराजित्य तु संग्रामे सोऽश्विनं भीमविक्रमं।
जयश्रिया सेव्यमानो वृत्रो युद्धे व्यवस्थितः। ११२००

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि वामने देवासुरयुद्धे अष्टचत्वारिंशदधिकद्विशतोऽध्यायः॥२४८॥

॥ वैशम्पायन उवाच ॥ तत्रैव सुमहायुद्धे रणाजिर्द्देवसत्तमः। युध्यते सह दैत्येन एकचक्रेण धीमता।
प्रच्छाद्य रथपन्थानमुत्क्रोशन्तं महारवं। एकचक्रस्य सैन्यन्तु शरवर्षैरवाकिरत्।
महासुरा महावीर्य्या महापट्टिशयोधिनः। शूलानि च भुशुण्डीश्च क्षिपन्ति स्म महारणे।
तच्छूलवर्षं सुमहद्गदाशक्तिसमाकुलं। अशिवं दितिजैर्मुक्तं दुर्निवार्य्यं चराचरैः।
अन्योन्यमभ्यवर्त्तन्त देवासुरगणा युधि। महाद्रिशिखराकारा वीर्य्यवन्तो महारथाः। ११२०५
शतं शताश्च तुरगास्तस्य युक्ता महारथे। महासुरवरस्येव हिरण्यकशिपोर्युधि।
तेषां चरणपातेन चक्रनेमिस्वनेन च। तस्य बाणनिपातैश्च हता वै शतशः सुराः।
ततः स लघुभिश्चित्रैः शरैः सन्नतपर्व्वभिः। आयुधान्यच्छिनत् क्रुद्धः शतशोऽथ सहस्रशः।
बध्यमानाः शरैस्तीक्ष्णैरथद्विरदवाजिनः। गमिताः प्रलयं केचित्त्रिदशैर्दानवा रणे।
ततः प्रक्षीयमाणांस्तानुपलभ्य दितेः सुताः। त्यक्त्वा प्राणान् न्यवर्त्तन्त प्रगृहीतशरासनाः। ११२१०
ते दिशो विदिशश्चैव प्रतिरुध्य प्रहारिणः। अभ्यघ्नन्निशितैः शस्त्रैर्देवान्दितिसुता रणे।
रणाजिर्ज्वलितं घोरं परमं तिग्मतेजसं। मुमोचास्त्रं महाबाहुर्मथनं नाम संयुगे।
ततः शस्त्राणि शूलानि निशितानि सहस्रशः। अस्त्रवीर्य्येण महता दितिजः संप्रचिच्छिदे।
छित्त्वा शूलांश्च तान् सर्व्वानेकचक्रो महासुरः। प्रत्यविध्यत तं सार्धं दशभिर्निशितैः शरैः।
अस्त्रवेगं निहत्यैवं सोऽस्त्रैस्तस्यानु सैनिकान्। ज्वलितैरपरैः शीघ्रैस्तानविध्यत् सहस्रशः। ११२१५
तेषां छिन्नानि गात्राणि विसृजन्ति स्म शोणितं। पादपीवातिवृष्टानि शृङ्गाणि धरणीभृतां।
इन्द्राशनिसमस्पर्शैर्वेगवद्भिरजिह्मगैः। दितिजैर्बध्यमानाश्च विनेशुः सुरसत्तमाः।
एकचक्रो रणे तिष्ठन्नपश्यद्गजयूथपान्। बराभरणनिर्ह्रादान् समुद्रस्वननिस्वनान्।
मत्तान् सुकल्पितान् दृप्तान्महामात्रैरधिष्ठितान्। कुलीनान् वीर्य्यसम्पन्नान् प्रतिद्विरदघातिनः।
शिक्षितान् गजशिक्षायामैरावणसमान् युधि। न्यहनत् परसैन्यस्य गजान् गज इवासुरः। ११२२०
विचरन्तो महानागान् भीमरूपांस्त्रिधा मदं। मेघस्तनितनिर्घोषान् महाद्रीनिव चोच्छ्रितान्।
सहस्रसम्मितान् दिव्यान् जाम्बूनदपरिष्कृतान्। सुवर्णजालैर्विततांस्तरुणादित्यवर्चसः।
एकचक्रो गदापाणिर्बलवान् गदिनाम्बरः। उत्सारयामास गजान् महाभ्राणीव मारुतः।

विश्रुतस्त्रिषु लोकेषु क्रोधात्मा अज एकपात्। तत्तयोस्तुमुलं युद्धं सुमहल्लोमहर्षणं।
आसीत् प्रतिभयं रौद्रं वीराणां जयमिच्छतां। देवदानवदेहेषु दुस्तरा कीकसादला। ११६५५
शरीरसंघातवहा प्रसृता लोहितापगा। निजघानासुरं क्रुद्धो रुद्रो रौद्राकृतिः प्रभुः।
राडं शतमुखं युद्धे शत्रुसैन्यविदारणं। तस्य काञ्चनचित्राङ्गं रथं साश्वंससारथिं।
जघान समरे श्रीमान् क्रुद्धो दैत्यस्य सायकैः। तस्य पारिषदो ह्येको रथशक्त्या महाबलः।
विभेद समरे हृष्टो दानवं तं स्तनान्तरे। विभिन्नगात्रो रुद्रेण तथा पारिषदैरपि।
रुद्रस्य रथमायान्तं राडर्दानवसत्तमः। प्रममाथ तलेनाशु सहसा क्रोधमूर्च्छितः। ११६६०
भिन्नगात्रः शरैस्तीक्ष्णैः स रुद्रममितौजसं। रुद्रपारिषदांश्चापि जघानाशु पराक्रमी।
सृजन्तं शरवर्षाणि दानवं घोरदर्शनं। विभेद समरे रुद्रो बाणैः सन्नतपर्वभिः।
वर्त्तमाने तथा रौद्रे संग्रामे लोमहर्षणे। रुधिरौघप्रवाहिन्यो महानद्यः प्रसुस्रवुः।
दानवः समरे रुद्रं नीलाञ्जनचयोपमः। निर्बिभेद शरैस्तीक्ष्णैर्मेरुं सूर्य्य इवांशुभिः।
हतैर्दानवमुख्यैस्तु शूलशक्तिपरश्वधैः। पतितैः पर्वताभैश्च दानवैः कामरूपिभिः। ११६६५
वर्त्तमाने महाघोरे संग्रामे लोमहर्षणे। महाभेरीमृदङ्गानां पणवानां तथैव च।
शङ्खानां पटहानाञ्च सन्बभूव महास्वनः। हतानां स्वनतां तत्र दैत्यानाञ्चापि निस्वनः।
देवानाञ्च तथा तत्र शुश्रुवे दारुणो महान्। तुरङ्गमखुरोत्कीर्णं रथनेमिसमुद्धतं।
रुरोध मार्गं योधानां चक्षूंषि च धरारजः। शस्त्रपुष्पोपहारा सा तत्रासीद्युद्धमेदिनी।
दुर्द्दर्शा दुर्विगाह्या च मांसशोणितकर्द्दमा। भल्लैः खड्गैर्गदाभिश्च शक्तितोमरपट्टिशैः। ११६७०
अपविद्धैश्च शतशो रथैः सांग्रामिकैर्हतैः। निहतैः कुञ्जरैश्चैव तथा विदशदानवैः।
चक्राक्षयुगशस्त्रैश्च भग्नैरवनिमाश्रितैः। बभूवायोधनं घोरं दिग्धिताशनसङ्कुलं।
उत्थितुश्च कबन्धानि दिक्षु सर्व्वासु संयुगे। अन्योन्यसङ्कुवीराणां शूराणां जयमिच्छतां।
संप्रहारस्तदा युद्धे वर्त्तते स्म भयङ्करः। सैन्यानां संप्रयुक्तानां शूराणामनिवर्त्तिनां।
अजस्य चैकपादस्य राहोश्चैव महात्मनः। तेषान्तु तत्रापततां सैन्यानामतिनिस्वनः। ११६७५
उद्वर्त्ततामन्तकाले समुद्राणामिव स्वनः। तत्रैकस्तु स धूम्रो भीमो रुद्रो महाबलः।
विभेद केशिनं शत्या गदापट्टिशशूलभृत्। घोरा नानाप्रहरणा भीमास्या भीमदर्शनाः।
निष्पेतू रुद्रदयिता महापारिषदास्तथा। रथमास्थाय स श्रीमांस्तप्तकाञ्चनकुण्डलः।
दानवैः संवृतः केशी युध्यते युधि दुर्ज्जयः। तस्य संग्रामशौण्डस्य संग्रामेपि युयुत्सतः।
निष्पेतुरुग्रवीर्य्यस्य ज्वालाः प्रवितता मुखात्। स तु सिंहाञ्चितस्कन्धः शार्दूलसमविक्रमः। ११६८०
महाजलदसंकाशो मृदङ्गसमनिस्वनः। तस्य निष्पतमानस्य दानवैः संवृतस्य वै।
बभूव सुमहानादः क्षोभयंस्त्रिदिवं तथा। तेन शब्देन वित्रस्ता त्रिदशानां महाचमूः।
द्रुमशैलप्रहरणा योद्धुमेवाभ्यवर्त्तत। तेषाञ्च देवदैत्यानां युयुत्सूनां परस्परं।

सन्निपात. सुतुमुलो रौद्रो लोकभयावहः । तेषां युद्धं महाघोरं संजज्ञे लोमहर्षणं।
देवदानवसंघानां प्राणांस्त्यक्त्वा महाहवे। सर्व्वे ह्यतिबला: शूरा: सर्व्वे पर्व्वतसन्निभा:। १२९८५
सर्व्वे सर्व्वास्त्रविद्वांस: सर्व्वे सर्व्वायुधोद्यता:। त्रिदशा दानवाश्चैव परस्परजिघांसवः।
तेषां विनदतां शब्द: संयुगे मेघनिस्वन.। शुश्रुवेऽतिमहाघोरस्त्रस्थावरकम्पन.।
रेणुश्चारुणसङ्काश: सुभीम: समपद्यत। उद्धूतो देवदैत्यौघै: संरोध दिशो दश।
अन्योन्यं रजसा तेन कौशेयारुणपाण्डुना। संवृता बलरूपेण ददृशुर्नैव संयुगे।
न ध्वजो वा पताका वा न वर्म्म तुरगोऽपि वा। आयुधं स्यन्दनो वाऽपि ददृशे नैव सारथि:। १२९९०
स शब्दस्तुमुलस्तेषामन्योन्यमभिधावतां। श्रूयते तुमुले युद्धे न रूपाणि चकाशिरे।
दानवा एव संरब्धा दानवान् जघ्नुराहवे। त्रिदशांस्त्रिदशाश्चापि निजघ्नुस्तुमुले तदा।
ते परांश्च विनिघ्नन्त: स्वांश्च युद्धे सुरासुरा:। रुधिरार्द्रां तथा चक्रुर्मेदिनीं ते सुरासुरा:।
ततस्तु रुधिरौघेण सिक्तं न्हदितं रज.। शरीरशतसंकीर्णो बभूव स महारण:।
शूलशक्तिगदाखड्गपरिघप्रासतोमरै:। त्रिदशा दानवाश्चैव जघ्नुरन्योन्यमाहवे। १२९९५
बाहुभि: परिघाकारैर्निघ्नन्त: पर्व्वतैस्तथा। रुद्रपारिषदा: सर्व्वे सूदयन्ति स्म दानवान्।
रुद्रपारिषदांश्चैव महाद्रुमसहस्रभि'। निजघ्नु. समतिक्रम्य शरैश्चाशाद दानवा.।
एतस्मिन्नन्तरे क्रुद्ध. कोधो दानवसत्तम:। संग्रहर्षी घोर: स स्वान्यनीकानि हर्षयन्।
तेषां परमसंक्रुद्धो वज्रमस्त्रमुदैरयत्। वज्रेणास्त्रेण दिव्येन दैत्येन सुमहात्मना।
महापारिषदा: सर्व्वे हता युधि सुदुर्ज्जया:। वज्रास्त्रपीडिता भ्रान्ता रुद्रपारिषदा युधि। १३०००
विप्रकीर्णद्रुमा: पेतु: शैला वज्रहता इव। एवं तत्तुमुलं युद्धमभवल्लोमहर्षणं।
केशिन. सह रुद्रेण तदद्भुतमिवाभवत्।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि वामनप्रादुर्भावे देवासुरयुद्धे जनपञ्चाशदधिकद्विशतोऽध्याय:। २४९॥
॥ वैशम्पायन उवाच ॥ वृषपर्व्वा तु दैत्येन्द्रो विश्रुतोद्भुतविक्रम:। निष्कम्भुं योधयामास लोहितार्कसमद्युति।
क्रोधमूर्च्छितवक्त्रस्तु धुन्वन् परमकार्म्मुकं। ध्वजिनो भेद्य शत्रूणां सारथिं त्वरितोऽब्रवीत्।
अत्रैव तावत्त्वरित नय मे सारथे रथं। एते हि देवा. सहिता घ्नन्ति न: समरे बलं। १३००५
एतानहं हन्तुमिच्छामि समरश्लाघिनो रणे। एतैर्हि दानवानीके कृतं छिद्रमिदं महत्।
तत: प्रजविताश्वेन रथेन रथिनाम्बर:। शरौघमसृजत् क्रुद्ध. शरजालैर्महासुर:।
न शक्तं देवता. शक्ता: किं पुनर्योद्धुमाहवे। वृषपर्व्वेषुभिर्भिन्ना: सर्व्वे एवाभिदुद्रुवु:।
तान्मृत्युवशमापन्नान् दैवतवरपुङ्गवान्। समीक्ष्य जातोनिष्कम्भुस्त्वरतश्च महाबल:।
दृष्ट्वा तं तत्र निष्कम्भुं सर्व्वस्त्रिदशसत्तमा:। समेत्य सहिता. सर्व्वे तं द्रुतं पर्य्यवारयन्। १३०१०
व्यवस्थितश्च निष्कम्भुं दृष्ट्वा ते त्रिदशोत्तमा:। बभूवुर्बलवन्तो वै तस्यास्त्रबलसंश्रया।
वृषपर्व्वा तु शैलाभं निष्कम्भुं समरे स्थितं। महेन्द्र इव धाराभि: शरवर्षैरवाकिरत्।

अचिन्तयित्वा बाणांस्तान् शरीरे पतितान् बहून् । स्थितश्चमूमुखे श्रीमान् ससैन्यः स महाबलः ।
संप्रहृष्य महातेजा वृषपर्व्वाणमाहवे । अभिदुद्राव वेगेन कम्पयन्निव मेदिनीं ।
तस्य त्वाधावमानस्य दीप्यमानस्य तेजसा । बभूव रूपं दुर्द्धर्षं दीप्तस्येव विभावसोः । ११०१८
रथं त्यक्त्वा स तु श्रीमान् सक्रोधः कमलेक्षणः । वृक्षमुत्पाटयामास महाशाखं महाक्षुपं ।
ततश्चिक्षेप तं वृक्षं निष्कम्भुर्वृषपर्व्वणः । तं गृहीत्वा महावृक्षं पाणिनैकेन दानवः ।
विनद्य सुमहानादं भ्रामयित्वा च वीर्य्यवान् । सगजांश्च गजारोहान् सरथान् रथिनस्तदा ।
जघान दानवस्तेन शाखिना त्रिदशांस्तथा । तमन्तकमिव क्रुद्धं समरे प्राणहारिणं ।
वृषपर्व्वाणमासाद्य त्रिदशा विप्रदुद्रुवुः । तमापतन्तं संक्रुद्धं त्रिदशानां भयावहं । ११०२०
ददर्श वीरो निष्कम्भुश्चुकोप च ननाद च । स तत्र निशितैर्बाणैस्त्रिंशता मर्म्मभेदिभिः ।
निर्बिभेद महावीर्य्यो निष्कम्भुर्दानवाधिपं । दैत्यानामथ निष्कम्भुः शरशक्तिभिरर्द्दितः ।
विद्धः समरमूर्द्धन्यो रुधिरं प्रास्रवद्बहु । उद्विग्ना मुक्तकेशाश्च भग्नदर्पा. पराजिताः ।
श्वसन्तो दुद्रुवुः सर्व्वे भयादेव वृषपर्व्वणः । अन्योन्यं समसन्युक्ते त्रासिता वृषपर्व्वणा ।
शुष्कतस्त्रासंमूढाः प्रेक्षमाणा मुहुर्मुहुः । त्यक्तप्रहरणाः सर्व्वे कृतास्ते वृषपर्व्वणा । ११०२५
संग्रामे युद्धशौण्डेन तदा निष्कम्भुसैनिकाः । तत्रैव तु महावीर्य्यः प्रह्लादः कालमाहवे ।
योधयामास रक्ताक्षो हिरण्यकशिपोः सुतः । तस्य दानववीरस्य युद्धकाले जयक्रियाः ।
चकार त्वरया युक्तो भार्गवो विजयावहाः । हुताशनं तर्पयतो ब्राह्मणांश्च नमस्यतः ।
आज्यगन्धं प्रतिवहन् मारुतः सुरभिर्ववौ । स्रजश्च विविधाकारा जयार्थमभिमन्त्रिताः ।
प्रह्लादस्य शुभे मूर्द्धि आबबन्धोशना स्वयं । कालेन सह संग्रामे प्रयुद्धस्य महात्मनः । ११०३०
प्रह्लादस्यातिवीर्य्यस्य शान्तिश्चक्रे स भार्गव. । दश शिष्यसहस्राणि भार्गवस्य महात्मनः ।
यानि दानवमुख्यानां अपुः शान्तिमनुत्तमां । अथर्व्वाणमयी दिव्यं ब्रह्मसंस्तवचोदितं ।
रणप्रवेशसदृशं कर्म्म वैजयिकं कृतं । तत. सर्व्वास्त्रविद्वांसः समरेष्वनिवर्त्तिनः ।
विद्यामतसमायुक्ताः कृतस्वस्त्ययनक्रियाः । धनुर्हस्ताः कवचिनो वेगेनाशुत्य दानवाः ।
बलिमभ्यर्च्च्य राजानं प्रह्लादं पर्य्यवारयन् । आस्थाय दिव्यं विपुलं रथं परमदारुणं । ११०३५
नानाप्रहरणाकीर्णं सचक्रमिव पर्व्वतं । तद्बभूव मुहूर्त्तेन खेडिताक्षोटिताकुलं ।
मेरोः शिखरमापूर्णं द्यौरिवाम्बुधरागमे । शस्त्रः पञ्चशताशानामामुच्य सुविभूषिताः ।
बान्धवान् संपरिष्वज्य संपतन्ति रणप्रियाः । महायुधधरः श्रीमान् शुभवर्म्मधरः प्रभुः ।
शतनुच्चशिरस्त्राणि धन्वी परमदुर्ज्जयः । सिंहशार्दूलदृप्तानां नदतां क्ष्विडितोत्क्रुष्टिनां ।
तस्य सैन्यसहस्राणि प्रयान्त्यये महारणे । सैन्यपञ्चगतास्तस्य रथाः परमदुर्ज्जयाः । ११०४०
सप्ततिर्भ्मं महाभाग गजास्तावन्त एव च । मध्ये व्यूहोदरस्थस्तु कालनेमिर्महासुरः ।
धनुर्विस्फारयन् घोरं ननाद प्रजहास च । तस्मिन् शतसहस्राणि पुरो यान्ति महायुगे ।

दानवानां बलवतां शक्रप्रतिमतेजसां। स समं वर्द्धमानस्तु पक्षाभ्यां विस्तृतो महान्।
अभवद्दानवव्यूहो दुर्भेद्यः सर्व्वदैवतैः। ततः शतसहस्राणि दानवानां धनुर्भृतां।
नानाप्रहरणानाञ्च परिमाणं न विद्यते। गदापरिघनिस्त्रिंशशूलपट्टिशमुद्गरैः। ११७४५
प्रगृहीतैर्व्यराजन्त दानवाः पर्व्वता इव। गर्ज्जन्तो विनदन्तश्च विक्रोशन्तश्च दानवाः।
अयुध्यन्त महावीर्य्याः समरेष्वनिवर्त्तिनः। ततस्तूर्य्यसहस्राणां संजज्ञे निस्वनो महान्।
हयानाञ्च गजानाञ्च गर्ज्जतामतिवेगिनां। दुन्दुभीनाञ्च निर्घोषः पर्ज्जन्यनिनदोपमः।
शुश्रुवे शङ्खशब्दश्च पटहानाञ्च निस्वनः। तेन शङ्खनिनादेन भेरीतूर्य्यरवेण च।
निर्घोषेण रथानाञ्च क्रोशतीव नभस्तलं। सागरप्रतिमौघेन बलेन महता वृतः। ११७५०
प्रह्लादोऽयुध्यत क्रुद्धः कालान्तकयमोपमः। तस्य नादेन रौद्रेण घोरेणाप्रतिमौजसः।
विनेदुः सर्व्वभूतानि त्रैलोक्यविदितैः खगैः। अन्तरीक्षात् पपातोल्का वायुश्च परुषो ववौ।
वमन्थः पावकं घोरं शिवाश्चैव ववाशिरे। प्रह्लादस्तु महावीर्य्यः प्रहसन् युद्धदुर्म्मदः।
उवाच वचनं श्रीमांस्तत्कालसममुत्तमं। अद्याहं दर्शयिष्यामि स्वबाहुबलमूर्ज्जितं।
अद्य महाणनिहतान् देवान् द्रक्ष्यथ संयुगे। बान्धवा निहता येषां त्रिदशैरिह सङ्गरे। ११७५५
अद्य ते निर्व्वपिष्यन्ति शत्रुमांसानि दानवाः। इममद्य मुहूर्त्तं रेणुं समरमूर्द्धनि।
अहं संशमयिष्यामि शत्रुशोणितविस्रवैः। तिमिरौघहतार्कञ्च सैन्यरेणुहतौकसं।
आकाशं संपतिष्यन्ति खद्योता इव मे शराः। दृष्ट्वा संपरिमोदध्वं दैवेभ्यस्त्यज्यतां भयं।
अद्याहं निहनिष्यामि कालेन्द्रं धनुषा रणे। तोषयिष्यामि राजानं बलिं बलवतां वरं।
विद्रवान् समरे जित्वा वार्षेराल्लकवन्त्रिनः। अव्ययाः सन्ति मे तूणाः शराश्चाशीविषोपमाः। ११७६०
स्थातुं मे पुरतः शक्ताः के रणे जीवितेप्सवः। हत्वा रिपुगणांस्तुष्टिरतुलाराजस्य राजसु।
हतस्य त्रिदिवे वासो नास्ति युद्धसमा गतिः। ते भयं प्रहतः कृत्वा रणे दानवसत्तमा।
निहत्येमानरीन् सर्व्वान् मोदध्वं नन्दने वने। एवमुक्त्वा महासैन्यं प्रह्लादो दानवोत्तमः।
कालस्य समरे सैन्यं तरसा ऽमर्द्दतासुरः। सर्व्वास्त्रविच्च शूरश्च नित्यञ्चापराजितः।
युद्धेष्वभिमुखो नित्यं स्वबाहुबलदर्पितः। षष्टीरथसहस्राणि विविधायुधधारिणां। ११७६५
प्रह्लादस्यातिवीर्य्यस्य ये तस्य तनया निजाः। तैस्तु क्रतुशतैरिष्टं विपुलैराप्तदक्षिणैः।
शान्ता धर्म्मपरा नित्यं नित्यं व्रतपरायणाः। दातारः प्रियकर्त्तारो वक्तारः शास्त्रवत्सु।
स्वदारनिरता दान्ता ब्रह्मण्याः सत्यसङ्गराः। यष्टारः क्रतुभिर्न्नित्यं नित्यं स्वाध्ययने रताः।
इष्वस्त्रकुशलाः सर्व्वे बलिनो दृढविक्रमाः। मत्तवारणविक्रान्ताः शत्रुसैन्यविमर्द्दकाः।
ईरयन्तः सदा चैव सुघोरान् वातरेचकान्। युद्धोत्सुकधियो नित्यं क्रोधरञ्जितलोचनाः। ११७७०
सन्दष्टौष्ठपुटा दैत्या विनेदुर्भीमविक्रमाः। क्ष्वेडितास्फोटितरवैश्चैवाधन्त परस्परं।
रेणुशङ्खरवैश्चैव सिंहनादैश्च पुष्कलैः। आयुद्धाशुश्च सहसा रणे वसुरनेकशः।

तालमात्राणि चापानि विकृष्य सुमहाभुजाः । अभ्यवमाणाः सहसा दानवा बाणपाणयः ।
सुरासुरैरथ्यजितं योधयन्ति रणेऽन्तकं । प्रतप्तहेमाभरणाः सर्व्वे ते श्वेतवाससः ।
दानवा मानिनः सर्व्वे सर्व्वे स्वर्गाभिकाङ्क्षिणः । सर्व्वे जयैषिणो वीराः सर्व्वे शत्रुवधोद्यताः । १२०७५
शुशुभे सा चमूर्दृप्ता पताकाध्वजमालिनी । गजाश्वरथसम्बाधा स्वर्गमार्गाभिकाङ्क्षिणी ।
ततः कालस्तु निर्यातो भीमो भीमपराक्रमः । विनदन् सुमहाकायो व्याधिभिर्व्वहुभिर्वृतः ।
ददर्श महतीं सेनां दानवानां बलीयसां । अभिसंजातहर्षाणां कालं समभिगर्ज्जतां ।
आपतन्तं तदाऽनीकं दानवानां तरस्विनां । प्रतिलोमं चकाराशु व्याधिभिः सहितोऽन्तकः ।
प्रविश्य ध्वजिनीञ्चैषां घातयामास वीर्य्यवान् । कालो रुधिरराक्षः सेनानीकेन संवृतः । १२०८०
प्रह्लादबलमत्युग्रं प्रह्लादञ्च महासुरं । आजघान रणे कालो दण्डमुद्गरपट्टिशैः ।
शरशक्त्यृष्टिखड्गांश्च शूलानि मुषलानि च । गदाश्च परिघांश्चैव विचित्रांश्च परश्वधाः ।
धनूंषि च विचित्राणि शतघ्न्यश्च स्थिरायसाः । पात्यन्ते व्याधिभिर्युद्धे दानवानां चमूमुखे ।
बहवो व्याधयो युद्धे बहूनसुरपुङ्गवान् । व्याधीनपि च दैत्यौघा निजघ्नुर्व्वहवो बहून् ।
शूलेन मथिताः केचित् केचिच्छिन्नाः परश्वधैः । परिघैराहताः केचित् केचिच्च परमायुधैः । १२०८५
केचिद्द्विधाकृताः खड्गैः स्फुरन्तः पतिता भुवि । व्याधयो दानवैरेवं नानाशस्त्रैर्विदारिताः ।
ते चापि व्याधिभिः सर्व्वे विविधैरायुधोत्तमैः । खड्गैश्च विमलैर्लौहैः प्रासतोमरमुद्गरैः ।
विभिन्ना दानवाः शूलैर्निकृत्ताश्च परश्वधैः । मुद्गरैः पट्टिशैश्चैव व्याधिभिश्च हता भृशं ।
हताः शस्त्रैरनेकैश्च मुष्टिभिश्च हता भृशं । वेमुः शोणितमत्यर्थं विदष्टदशनेक्षणाः ।
आर्त्तस्वरञ्च नदतां सिंहनादञ्च गर्ज्जतां । बभूव तुमुलः शब्दः संग्रामे लोमहर्षणः । १२०९०
मुष्टिभिश्चासमाङ्गानि तलैर्गोचाणि चासकृत् । सादितानि महो अम्भस्थितामेव संयुगे ।
वक्त्रफेना ध्वजावर्त्ता छिन्नबाहुमहोरगा । शूलशक्तिमहामत्स्या चापग्राहसमाकुला ।
रथोपलसम्बाधाध्वजद्रुमसमाहृता । सशब्दघोरविस्तारा लोहितोदाऽभवन्नदी ।
स्वधनुःशक्रधनुषा काञ्चनाङ्गदविद्युतौ । तौ दैत्यकालजलदौ शरधारां ववर्षतुः ।
तौ महामेघसङ्काशौ रथनागगतौ तदा । बभूवतुरतिक्रुद्धौ साम्बुगर्भाविवाम्बुदौ । १२०९५
तप्तकाञ्चनसन्नाहौ दिव्यहारविभूषितौ । तौ विरेजतुरायस्तौ सूर्य्यवैश्वानराविव ।
तौ महाचलसंकाशावन्योन्यस्य चमूं तदा । वज्राशनिसमस्पर्शैर्बाणैर्जघ्नतुराहवे ।
परस्परं समासाद्य तयोर्युधि दुरासदे । नाशयन्त तदा योधा जीवितान्यपि संयुगे ।
शरनिर्भिन्नसर्व्वाङ्गा युधि प्रक्षीणजीविताः । निपेतुर्योधमुख्याश्च रुधिरोक्षितवक्षसः ।
पतितैर्निपतद्भिश्च पात्यमानैश्च संयुगे । बभूव भूः समाकीर्णा योधैरुद्धतजीवितैः । १२१००
न ह्यन्तकः शरान् घोरान् न च सन्दधतोऽसुरौ । अन्तरं ददृशे कश्चित् प्रयत्नादपि संयुगे ।
लघुत्वाच्च महाबाहू युद्धशौण्डौ महाबलौ । मण्डलीकृतचापौ तु सकृदेव बभूवतुः ।

प्रह्लादस्य तु वाणौघैर्द्रुद्राव्यान्तकवाहिनी । तुद्यमाना बलवता वायुनेवाभ्रमण्डलं ।
हतदर्पन्तु विज्ञाय प्रह्लाद. कालमाहवे । अपयातश्च समरादिवसं संप्रतस्थे तं ।
मत्वा वशगतञ्चैव प्रह्लादो युद्धदुर्म्मदः । तञ्चैवान्यां चमूं भूय. प्रामर्द्दत महासुरः । ११८०५
कालप्रह्लादयोर्युद्धमभवद्यादृशं तदा । तादृश सर्व्वभूतेषु न भूतं न भविष्यति ।
एवमद्भुतवीर्य्यौजा महारणकृतश्रम । प्रह्लादः परिखिन्नोऽत्र कालस्तपस्यतो रणात् ।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि वामने देवासुरयुद्धे पञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५० ॥
॥ वैशम्पायन उवाच ॥ अनुह्लादो धनाध्यक्षं प्रह्लादस्यानुजो बली । सैन्यैर्योधयामास क्षोभयन् यक्षवाहिनीं ।
महता च बलौघेन अनुह्लादः सुरोत्तमं । अर्द्दयामास संक्रुद्धो धनाध्यक्षं प्रतापवान् ।
अस्यमाणश्चिरात्मानाहवस्य नुदायुधान् । चकार कदनं घोरं धनुष्पाणिर्म्महासुरः । ११८१०
आवर्त्त इव संजज्ञे बलस्य महतो महान् । क्षुभितस्याप्रमेयस्य सागरस्येव संप्लवः ।
निहतानां शरीरैश्च दानवानाञ्च मेदिनी । बभूव निचिता सर्व्वा पर्व्वतैरिव संवृता ।
मेरुपृष्ठन्तु रक्तेन रञ्जितं संप्रकाशते । सर्व्वतो माधवे मासि पुष्पितैरिव किंशुकैः ।
हतैर्वीरैर्गजैरश्वैः प्रावर्त्तत महानदी । शोणितोदा महाघोरा यमराष्ट्रविवर्द्धिनी ।
मज्जमेदोमहापङ्का विप्रकीर्णान्त्रशैवला । छिन्नकायशिरोमीना ह्यङ्गावयवशर्करा । ११८१५
गृध्रहंसगणाकीर्णा कङ्कसारसनादिनी । वसाफेनसमाकीर्णा भीतक्रुष्टस्तनितस्वना ।
तां कापुरुषदुर्द्धर्षां युद्धभूमिमहानदीं । नदीमिवातपापाये हंससारसशोभितां ।
विदशा दानवाश्चैव तेरुस्तां दुस्तरां तदा । यथा पद्मरजोध्वस्तां नलिनीं गजयूथपाः ।
तत. सृजन्तं वाणौघाननुह्लादं रथे स्थितं । ददर्श तरसा देवो निघ्नन्तं यक्षवाहिनीं ।
क्रुद्धस्ततो दैत्यबलं सूदयामास वित्तप । विक्षिपन्निव खे वायुर्महाभ्रपटलं बलात् । ११८२०
समीक्ष्य तुमुलं युद्धमनुह्लादस्समूपति. । रथेनादित्यवर्णेन कुबेरमभिदुद्रुवे ।
स धनुर्धन्विनां श्रेष्ठो विकृष्य रणमूर्द्धनि । उत्ससर्ज्ज शितान् वाणान् वित्तेशस्य महात्मन. ।
कुबेरं प्राप्य ते वाणा निर्भिद्य सुसमाहिता. । अपरान् पृष्ठतो जग्मुर्व्यासक्तान् यक्षराक्षसान् ।
देव. शरैरभिहतो निश्चितैर्ज्वलनोपमै. । अनुह्लादं प्रत्युदियात्संक्रुद्ध. परमाहवे ।
ततो वैश्रवणो राजा क्रुद्धो यक्षगणैः सह । ववर्ष शरवर्षाणि दानवान् प्रति वीर्य्यवान् । ११८२५
तद्दृष्ट्वा शरदं वर्षं घोरम् भीमसागत । अवारयन् वारयितुं प्रतिग्रहं ति में क्षितः ।
एवमेव कुबेरस्य शरवर्षं महासुर । निमीलिताक्ष सहसा दैत्योऽसहत दारुणं ।
रोषितः शरवर्षेण धनदेन महाबल । इन्द्रकेतुमतीकाशमभितोऽपश्यत द्रुमं ।
प्ररूढशाखाविटपं तरुणाङ्कुरपल्लवं । उत्पाट्य कुपितो दैत्यस्तं फलसमाकुलं ।
निजघान हयश्रेष्ठान् कुबेरस्य महाजवान् । तस्य कर्म्म महाघोरं दृष्ट्वा सर्व्वे महासुरा । ११८३०
सिंहनादं नदन्ति स्म ह्यनुह्लादप्रहर्षिता । तयोः सुतुमुलं युद्धं संजज्ञे देवदैत्ययोः ।

ततस्तौ क्रोधरक्ताक्षावन्योन्यवधकाङ्क्षिणौ। अन्योन्यं विविधैः शस्त्रैर्घोरैर्जघ्नतुराहवे ।
त्रिदशैर्दानवा युद्धे मथिताः प्राणवत्तरैः। दानवैस्त्रिदशाश्चापि क्रुद्धैर्भुवि निपातिताः।
दानवास्तत्र संक्रुद्धास्त्रिदशान्निशितैः शरैः। विव्यधुर्व्वज्रसंकाशैः कङ्कपत्रैरजिह्मगैः।
विदार्यमाणा दैत्यौघैस्त्रिदशास्तु महाबलैः। अमर्षिततरा भूयश्चक्रुः कर्माण्यभीतवत्। ११८३५
ते गदाभिः सुभीमाभिः पट्टिशैः शूलमुद्गरैः। परिघैश्च सुतीक्ष्णाग्रैर्दानवाः पीडिताः शरैः।
शरनिर्भिन्नगात्राश्च खड्गविच्छिन्नवक्षसः। जगृहुस्ते शिलाश्चैव द्रुमांश्चासुरसत्तमाः।
ते भीमवेगा दितिजा नर्दमानाः पुनः पुनः। समन्थुस्त्रिदशान् वीर्याच्छतशोऽथ सहस्रशः।
ततः सुतुमुलं युद्धं तेषां तत्र समवर्त्तत। शिलाभिर्विपुलाभिश्च बहुशाखैश्च पादपैः।
परिघैः पट्टिशैश्चैव भिन्दिपालैः परश्वधैः। केचिन्निकृत्तशिरसः केचिच्च विदलीकृताः। ११८४०
केचिद्विनिहता भूमौ रुधिरार्द्राः सुरासुराः। केचिद्विद्राविता नष्टाः परस्परवधार्द्दिताः।
विभिन्नहृदयाः केचिच्छिन्नपादाश्च शेरते। विदारितास्त्रिशूलैश्च केचित्तत्र गतासवः।
तद्युद्धं सुमहद्घोरं देवदानवसंकुलं। बभूव शस्त्रतुमुलं शिलापादपसंकुलं।
धनुर्ज्यातन्त्रिमधुरं हिक्कातालसमन्वितं। आर्त्तस्तनितनिर्घोषं युद्धगान्धर्व्वमाबभौ।
कुवेरस्तु धनुष्पाणिर्दानवगणमूर्द्धनि। दिशो विद्रावयामास संक्रुद्धः शरवृष्टिभिः। ११८४५
कुवेरेणार्दितं सैन्यं विद्रुतं प्रेक्ष्य दानवः। अभ्यद्रवदनुह्रादः प्रगृह्य विपुलां शिलां।
क्रोधाद्द्विगुणरक्ताक्षः पितुस्तुल्यपराक्रमः। शिलां तां पातयामास कुवेरस्य रथोत्तमे।
आपतन्तीं शिलां दृष्ट्वा गदापाणिर्द्धनाधिपः। रथादाप्लुत्य वेगेन वसुधायां व्यतिष्ठत।
सचक्रकूवरद्वयं सध्वजं सशरासनं। भंक्त्वा रथोत्तमं तस्य निपपात शिला भुवि।
प्रमथ्य तु कुवेरस्य प्रह्लादस्यानुजो रथं। सुराणां कदनं चक्रे सस्कन्धविटपैर्द्रुमैः। ११८५०
प्रभिन्नशिरसो भग्नास्त्रिदशाः शोणितोक्षिताः। द्रुमैः प्रमथिताश्चात्र निपेतुर्द्धरणीतले।
विद्राव्य विपुलं सैन्यमनुह्रादो महासुरः। गिरिशृङ्गं महद्गृह्य कुवेरमभिदुद्रुवे।
तमापतन्तं धनदो गदामुद्यम्य वीर्य्यवान्। विनर्द्याह्वाययामास दानवेन्द्रं महाबलं।
तस्य क्रुद्धस्य संक्रुद्धो गदां तां बहुकण्टकां। न्यपातयत वित्तेशो दानवस्योरसि प्रभुः।
दैत्यस्तु क्रोधरक्ताक्षस्तं प्रहारमचिन्तयन्। वित्तेशस्योपरि तदा गिरिशृङ्गमपातयत्। ११८५५
स विह्वलितसर्व्वाङ्गो गिरिशृङ्गेण ताडितः। पपात सहसा भूमौ स पिङ्गाक्षो महाबलः।
रराज पतितो भूमौ विकीर्ण इव पर्व्वतः। वित्तेशं विह्वलं दृष्ट्वा सर्व्वे ते यक्षराक्षसाः।
परिवार्य्य महात्मानं ररक्षुर्भीमविक्रमाः। मुहूर्त्तं विह्वलो भूत्वा प्रभुर्विश्रवसः सुतः।
उत्थितः सहसा देवः पिङ्गलाक्षो महाबलः। ननाद च महानादं त्रैलोक्यमभिनादयन्।
जनयन्निव निर्घोषं विधमन्निव पर्व्वतान्। तमबध्यन्तु विज्ञाय निहतं पुनरुत्थितं। ११८६०
प्रेक्ष्य पिङ्गाक्षमायान्तं दानवा विप्रदुद्रुवुः। तांश्च विद्रवतो दृष्ट्वा अनुह्रादोऽसुरोऽब्रवीत्।

कालनेमिं सुनेमिञ्च महानेमिञ्च दानवं। आत्मानञ्चैव वीर्य्यञ्च विस्मृत्याभिजनं तथा।
क गच्छथ भयत्रस्ताः प्राकृता इव दानवाः। निवर्त्तध्वं महावीर्य्याः किं प्राणान् परिरक्षथ।
नालं युद्धाय यद्योऽयं महतीयं विभीषिका। एतां समुत्थिनामद्य दानवानां विभीषिकां।
विक्रम्य विधमिष्यामि निवर्त्तध्वं महासुराः। तेऽसुराः संनिवृत्याथ समदा इव कुञ्जराः। ११८६५
निजघ्नुः परमक्रुद्धा देवसैन्यं महासुराः। चीर्णप्रहरणाः केचिन्मेघगम्भीरनिस्वनाः।
दर्पोत्कटा भुजैरेव संप्रहारं प्रचक्रिरे। पांशुभिश्चैव काष्ठैश्च शिलाभिश्च महाबलाः।
बाहुभिश्च तथाऽन्योन्यमाक्षिपन्ति स्म वेगिताः। मुष्टिभिश्च तलैश्चैव नखपातैर्महाबलाः।
पादपैश्च महाशाखैरयुध्यन्त महारणे। अनुह्रादस्तु संक्रुद्धो देवतानां महाचमूं।
ममन्थ परमायस्तो वनान्यग्निरिवोत्थितः। रुधिरार्द्रास्तु बहवः शेरते योधसत्तमाः। ११८७०
निकृत्ताः पतिता भूमौ ताम्रपुष्पा इव द्रुमाः। अनुह्रादस्य विक्रान्तो देवस्ताशोविषोपमान्।
युध्यमानस्य समरे व्यसृजन्निशितान् शरान्। धनाधिपेन विद्धस्य अनुह्रादस्य संयुगे।
अङ्गारमिश्राः क्रुद्धस्य मुखान्निश्चेरुरर्चिषः। अथ वाणसहस्रेण विनिघ्नं दानवोत्तमः।
विव्याध समरे क्रुद्धो दण्डपाणिरिवान्तक। कुवेरस्तु शरैर्भिन्नः समन्तात् क्षतजोक्षितः।
रुधिरं परिसुस्राव गिरिः प्रस्रवणैरिव। लब्ध्वा स तु पुनः संज्ञां रोषरक्तेक्षणः सुरः। ११८७५
गदामथ समासाद्य भीमां भीमपराक्रमः। चिक्षेप दैत्यमुद्दिश्य बलवान् क्रोधमूर्च्छितः।
अप्राप्तामन्तरे सोऽथ तां गदां गदयाऽसुरः। बभञ्ज विनदन् क्रुद्धस्तदाश्चर्य्यमभूत्तदा।
प्रगृह्य तु गदां भूयो ह्यभिदुद्राव दानवं। तमापतन्तं दृष्ट्वैव अनुह्रादो महाबल।
गिरिशृङ्गमथोत्पाट्य कैलासाचलसन्निभं। धनाधिपं प्रदुद्राव व्यादितास्य इवान्तक।
तमन्तकमिवायान्तमजय्यं सकलैः सुरैः। ग्रसन्तमिव दैतेयं त्रैलोक्यमखिलं रुषा। ११८८०
तमालोक्य तथारूपं धनाध्यक्षो रणं भयात्। अपहाय ययौ तत्र यत्र देवः शचीपतिः।
तस्य चातिमहत् कर्म्म दृष्ट्वा वित्तपतिस्तदा। जगाम भयसंत्रस्तो यत्र देव. शचीपतिः।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि वामने देवासुरयुद्धे एकपञ्चाशदधिकद्विशततोऽध्यायः॥ २५१॥
॥ वैशम्पायन उवाच ॥ विप्रचित्तिस्तु वरुणं दैत्यानामधिपोऽव्यय.। जघानेषुगणैः क्रुद्धो दीप्तैरिव महोरगै.।
संदह्यमानो दैत्येन दीप्तै. शरगभस्तिभिः। नाभ्यजानत कर्त्तव्यं संग्रामे स जलेश्वरः।
सर्व्वलोकेश्वरस्यैव परमेष्ठी प्रजापतिः। नाशक्नोद्रयत. स्थातुं विप्रचित्तेर्ज्जलाधिपः। ११८८५
वज्रो नाम महाव्यूहो निर्भय. सर्व्वतोमुख.। संव्यूह्य प्रत्ययुध्यन्त दानवा देववाहिनी।
अग्निज्वालासमन्तत्र रविमण्डलसन्निभं। मुखमाभाति दैत्यस्य विप्रचित्तेर्महात्मनः।
वरुणस्तु महातेजा विप्रचित्तिं महासुरं। प्रदहन्निव तेजोभिर्ज्जिगीषुः प्रत्यवैक्षत।
स्रग्दाममालाभरणं दत्तपञ्चाङ्गुलान्तरं। जग्राह परिघं दैत्यः कैलासशिखरोपमं।
पिनद्धं काञ्चनैः पट्टैर्हेममालिनमायसं। यमदण्डोपमं घोरं दैत्यानां भयनाशनं। ११८९०

भ्रामयामास तं क्रुद्धो महाभ्रकध्वजोपमं । विननाद निवृत्ताक्षो विप्रचित्तिर्महासुरः ।
स कण्ठस्थेन निष्केण भुजस्थैरपि चाङ्गदैः । कुण्डलाभ्यां विचित्राभ्यां स्रजा चैव विचित्रया ।
दानवो भूषणैर्भाति परिघेणायसेन च । यथेन्द्रधनुषा मेघः सविद्युत्स्तनयित्नुमान् ।
प्रक्षोभ्य परिघाग्रेण वायुस्कन्धं महात्मनः । प्रजज्वाल सधूमार्चिः सङ्घर्षजनितोऽनलः ।
विद्याधरगणैः सार्द्धं गन्धर्व्वनगरैरपि । सह देवामरावत्या सिद्धलोकैस्तथा सह । ११८९५
ग्रहनक्षत्ररचितं सार्कचन्द्रविभूषितं । दैत्येन्द्रपरिघोद्धूतं भ्रमतीव नभस्तलं ।
दुरासदः स संजज्ञे परिघाभरणः प्रभुः । सुरेन्धनोऽसुरेन्द्राग्निर्युगान्ताग्निरिवोत्थितः ।
त्रिदशा वरुणस्यैव न शेकुः स्यन्दितुं भयात् । तत्रासीन्निर्भयस्त्वेकः कौशिको वासवः प्रभुः ।
भास्करप्रतिमं घोरं परिघं रौद्रदर्शनं । पातयामास सेनायां जलेशस्य स दानवः ।
पतता तेन संग्रामे जलेशस्य महात्मनः । भूतानां दशसाहस्रं परिघेण समाहतं । ११९००
तेषां गात्राणि चासाद्य व्यशीर्य्यत सहस्रधा । विशीर्य्यमाणो विबभावुल्कापातमिवाम्बरे ।
भूयश्चैनं तदा भ्राम्य वरुणायाभ्यपातयत् । पात्यमाने तदा तस्मिन् शरीरे वरुणस्य च ।
स भिन्नः परिघो घोरो देवगात्रे व्यशीर्य्यत । शीर्य्यमाणस्य चूर्णानि खद्योता इव चाम्बरे ।
स तु तेन प्रहारेण न चचाल जलाधिपः । परिघेणाहतः संख्ये यथा भूमिचलेऽचलः ।
स्वसैन्येष्वथ भग्नेषु भिन्नदेहेषु चाहवे । मुहूर्त्तमगमत् क्षोभमपाम्पतिररिन्दमः । ११९०५
सोऽमर्षवशमापन्नो वरुणोऽमितविक्रमः । सर्व्वसंहारमकरोत् स्वपक्षस्यारिमर्द्दनः ।
स सागरैश्चतुर्भिश्च वृतो दीप्तैश्च पन्नगैः । शङ्खमुक्तामणिनिभो बिभ्रत्ताम्रमयं वपुः ।
पाण्डरोद्धूतवसनो नानारत्नचिताङ्गदः । वरुणः पाशधृक् श्रीमान् कूर्म्ममीनसमाकुलः ।
वरुणस्तु तदा क्रुद्धस्तान्निरीक्ष्य स्वसैनिकान् । उवाच दृष्ट्वा युध्यध्वं दानवानां जिघांसया ।
अहमेनं हनिष्यामि भयं मुक्त्वा तु युध्यत । ततस्ते पन्नगाः सर्व्वे महार्णवसमाश्रयाः । ११९१०
अभ्युर्दैत्यायणमुखे नर्द्दन्तो जयकाङ्क्षिणः । ते तु नालीकनाराचैर्गदाभिर्मुसलैस्तथा ।
अभ्यघ्नन्दानवान्दीप्तान्मुदिता वरुणानुगाः । विप्रचित्तिस्तु संक्रुद्धो महाबलपराक्रमः ।
पन्नगानां शरीराणि व्यधमद्रणमूर्द्धनि । गारुडेन च सोऽस्त्रेण पन्नगान्दानवोत्तमः ।
घातयामास समरे गारुडैः पन्नगाशनैः । स शरैः स्वर्णपुङ्खैश्च शातकुम्भविभूषितैः ।
पन्नगान् समरे वीरः प्रममाथ सुदुर्ज्जयः । ते भिन्नगात्राः समरे पन्नगाः शरपीडिताः । ११९१५
पेतुर्म्मथितसर्व्वाङ्गा गजा इव महागजैः । तं तपन्तमिवादित्यं दीप्तैर्भोगभृतिभिः ।
अभ्यधावत संक्रुद्धः समरे वरुणः प्रभुः । ततस्ते दानवास्तत्र भिन्नदेहाः सहस्रशः ।
व्यथिता विद्रवन्ति स्म दिशो दश विचेतसः । इन्द्रस्यापि पराक्रम्य वरुणस्त्वक्रमोचितः ।
विमर्द्दमानो युयुधे समरे पाशभृद्दृढः । वारुणाः पश्यतापीह मुष्टिभिश्च कनोत्करान् ।
अभ्यवर्षन्त समरे विप्रचित्तिं महासुरं । तांश्च सैव सिंहाभिश्च प्रहरन्नाशेत्कटान् । ११९२०

व्यपोहत महातेजा विप्रचित्तिर्महासुरः । ततः पावकसङ्काशैः प्रयुक्तैः शीघ्रगामिभिः ।
वरुणस्य महावेगान् बिभेद समरे शरान् । कर्म्मणा तेन महता विप्रचित्तेर्महात्मनः ।
अग्नेराज्याहुतस्येव तेजः समभिवर्द्धत । स शरैः सूर्य्यसङ्काशैः सुयुक्तैः शीघ्रगामिभिः ।
वारुणौ तौ महासेनौ निर्भिनत्ति महाबलः । चोदयन्तौ सायकानां शरजालेन मोहितौ ।
शूलशक्त्यृष्टिभिश्चास्त्रं चकार रुधिरोक्षितौ । अभिद्रुतस्तु दैत्येन सैन्यैः सलिलाधिपः ।
महेन्द्रं शरणं प्राप्तो विप्रचित्तिभयार्द्दितः ।

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि वामने देवासुरयुद्धे द्विपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५२ ॥

॥ वैशम्पायन उवाच ॥ पराजयन्तु दैत्यानां दृष्ट्वाऽग्निस्त्रिदशोत्तम । चकार बुद्धिं दैत्यानां वधे मन्त्रविभिः स्तुतः ।
स्वयम्प्रभायाः शाण्डिल्याः यः पुत्रो हव्यवाहनः । हिरण्यरेताः पिङ्गाक्षो देवदूतो हुताशनः ।
लोहितो लोहितग्रीवो हर्त्ता दाता हविः कविः । पावको विश्वभुग्देवः सर्व्वदेवाननः प्रभुः ।
सुमन्त्रात्मा सुवर्च्चस्कः सहस्रार्च्चिर्विभावसुः । कृष्णवर्त्मा चित्रभानुर्देवाग्र्यश्चित्र एकराट् ।
लोकसाक्षीऽद्विसम्भूतप्रियोऽर्च्चिष्मान् वषट्कृतः । हव्यभक्ष शमीगर्भः स्वयोनिः सर्व्वकर्म्मकृत् ।
पावनः सर्व्वभूतानां विश्वात्मा तपोनिधिः । शमनः सर्व्वपापानां लेलिहानस्तनूनपात् ।
प्रदक्षिणावर्त्तशिखः शुचिरोमा महाकृतिः । हव्यभुग्भूतभव्येशो हव्यभागहरो हरिः ।
सोमपः स महातेजा भूतेशः सर्व्वभूतपात् । अष्टधा पावको भूतिर्भूतात्मा वै स्वधाधिपः ।
स्वाहापतिः सामगीतः सोमपूताशनोऽर्च्चिषक् । देवदेवो महाक्रोधो रुद्रात्मा मन्त्रसंस्तुतः ।
लोहिताश्वं वायुचक्रं रथमास्थाय भूतकृत् । धूमकेतुर्धूमशिखो नीलग्रीवः सुरोत्तमः ।
उद्यम्य दिव्यमाग्नेयमस्त्रं देवो रणे महत् । दानवानां सहस्राणि प्रयुतान्यर्बुदानि च ।
समरे विजयाकाङ्क्षी ददाहानिलसारथिः । प्राणो यः सर्व्वभूतानां देहे तिष्ठति पञ्चधा ।
यस्मात् यस्य कृतात्मस्य सखा च प्रभुरीश्वरः । प्रभञ्जनो यो लोकानां युगान्ते सर्व्वनाशनः ।
सप्तस्वरगता यस्य योनिर्गीर्भिरुदीर्य्यते । यो ह्याकाशमयो देवो दूरगः शब्दसम्भवः ।
यः कर्त्ता च विकर्त्ता च गतिर्गतिमतां प्रभुः । वेदकर्त्ता स्मृतो लोके ब्रह्मणा यः सनातनः
अमूर्त्तिमन्तं यं प्राहुर्महाभूतं महत्तरं । सोऽग्निं समीरयामास शमीगर्भं समीरणः ।
त्रिदिवारोहिभिर्ज्वालैर्जृम्भमाणो दिशो दश । दानवान् सभावाय युगान्ताग्निरिवानदत् ।
मेदोमज्जामहापङ्कां केशशैवलशाद्वलां । योधग्रीवोपलवहां स्रुतद्विपकटोत्कटां ।
शोणितोदां रणे दृष्ट्वा संग्रामसरितं विभुः । वह्निः प्रस्कन्दयामास दैत्यानां भयवर्द्धनः ।
ततोऽग्निर्दितिजान् सर्व्वान् प्रह्लादप्रमुखांस्तदा । पराजयामास विभुः क्रोधमान् महाहवे ।
केचित्प्रदीप्तैर्मुकुटैः केचिद्दीप्तैः शिरोरुहैः । केचिद्गात्रैः प्रदीप्तैश्च केचिद्दीप्तैर्मुखाननैः ।
केचित् प्रदीप्तैर्वस्त्रैः केचिच्छत्रैर्ध्वजैरथैः । असुरास्तत्र दृश्यन्ते प्रदीप्ताग्निना हताः ।
असुरा भयवित्रस्ता विद्रुताश्च दिशो दश । त्यक्त्वायुधानि सर्व्वाणि विप्रकीर्णरथध्वजाः ।

प्रयान्ति समरे भीता पावकेन पराजिता । न च पश्यन्ति वह्निं ते संप्रदीप्तं महाहवे। ११९८०
दिशः खं गात्रं मेघांश्च दीप्तान् पश्यन्ति दानवाः । ध्रुवं स्वयम्भुवा सृष्टो युगान्तस्तोययोनिना ।
इत्यत्र दानवाः सर्वे मेनिरे त्रस्तचेतसः । मयश्च शम्बरश्चैव महामायाधरावुभौ ।
पार्ज्जन्यवारुणी माये व्यधत्तां वारिविच्चरे । ताभ्यां वह्निः स मायाभ्यां सिच्यमानः समन्ततः ।
तोयौघैः पर्व्वतनिभैर्द्दर्शिरभवद्रणे । शाम्यमानन्तु समरे पावकं दैत्यनाशनं ।
दृष्ट्वा कीर्त्तिर्महातेजा वह्निमाह बृहस्पतिः । ११९८५
॥ बृहस्पतिरुवाच ॥ हिरण्यरेतः सुशिख ज्वलनाथ सर्व्वभुक् । सप्तजिह्वानल स्वाम लेलिहान महाबल ।
आत्मा वायुस्तव विभो शरीरमुत वीरुधः । योनिरापश्च ते प्रोक्ता योनिस्त्वमसि चाम्भसः ।
ऊर्द्ध्वञ्चाधश्च गच्छन्ति सञ्चरन्ति च पार्श्वतः । अर्च्चिषस्ते महाभाग सर्व्वतः प्रभवन्ति च ।
त्वमेवाग्ने सर्व्वमसि त्वयि सर्व्वमिदं जगत् । त्वं धारयसि भूतानि भुवनं त्वं बिभर्षि च ।
त्वमग्ने हव्यवाडेकस्त्वमेव परमं हविः । यजन्ते च सदा सन्तस्त्वामेव परमाध्वरे । ११९९०
त्वमन्नं प्राणिनां भुङ्क्ते जग्धपीताशित विभो । त्वत्तः प्रवृत्तो विजयस्त्वयि लोकाः प्रतिष्ठिताः ।
सृष्ट्वा लोकांस्त्रीनिमान् हव्यवाह प्राप्ते काले त्वं पचस्येव दीप्त । त्वमेवैकस्तपसे जातवेदो नान्यस्त्वत्तो विद्यते गोषु देव ।
वृषाकपिः सिन्धुपतिस्त्वमग्ने महामखेष्वग्रहरस्त्वमेव । विश्वस्य भूतिस्त्वमसि प्रसूतिस्त्वञ्च प्रतिष्ठा भगवन् प्रजानां ।
सृजस्यपो रश्मिभिर्जातवेदस्त्वमोषधीरोषधीनां रसांश्च । विश्वं त्वमादाय युगान्तकाले स्रष्टा भवस्यानल सर्गकाले ।
त्वमग्ने सर्व्वभूतानां योनिर्वेदेषु गीयसे । त्वया देवहितार्थाय निहता दानवा रणे । ११९९५
स्वयोनिस्ते महातेजस्तोयं मखशताऽर्च्चित । तत्स्वयोनिं समासाद्य किं विषीदसि पावक ।
पायस्व समरे देवान् दैत्येभ्यः सुरसत्तम । युगान्ताभामरारिघ्न विश्वकर्म्मन् सर्व्वभुक् ।
पिङ्गाक्ष लोहितग्रीव कृष्णवर्त्मन् हुताशन ।
इतिश्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि वामने देवासुरयुद्धे अग्निस्तवे त्रिपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५३॥
॥ वैशम्पायन उवाच ॥ बृहस्पतेस्तु वचनं श्रुत्वाऽग्निः सत्यमीरितः । भूयः सञ्ज्वाल रणे हविषेव महामखे ।
हतास्तु माया दैत्यानां प्रदीप्तेनाग्निना रणे । हतमाया हतबला बलिं ते समुपस्थिताः । १२०००
पराजितेषु दैत्येषु वह्निनाऽद्भुतकर्म्मणा । प्रह्लादस्तु परं वाक्यमाह दैत्यपतिं बलिं ।
भवानग्निश्च वायुश्च भास्करः सलिलं मही । नक्षत्राणि दिशो व्योम भूयश्च दानवसत्तम ।
भविष्यश्चैव भूतश्च भवश्चासुरसत्तम । दत्तं हि ते भगवता वरदेन स्वयम्भुवा ।
इन्द्रत्वञ्चामरत्वञ्च युद्धे चाप्यपराजयः । ईशित्वञ्च वशित्वञ्च बलञ्चैवामितं तव ।
सर्व्वभूतेश्वरत्वञ्च प्रभुत्वञ्च सदा तव । महायोगेश्वरत्वञ्च शूरत्वञ्च महामृधे । १२००५
अमितत्वं लघुत्वञ्च ये चान्ये सात्त्विका गुणाः । तत्पराजय देवेन्द्र देवान् सर्व्वांश्च सानुगान् ।
पर्योऽर्थं प्रह्लादवाक्यं तु तदन्यथा । तच्च तद्वचनं श्रुत्वा प्रह्लादस्य महात्मनः ।
बलिः परमहृष्टो गत्वा समरयोद्धा रत ।

ततः प्रयान्तं त्रिदशेन्द्रसन्निधौ महासुरेन्द्रं बलिमुत्तमश्रियं। तमन्वयाः चक्रुरभिप्रदक्षिणं द्विजाश्च मुख्याः परमश्च मङ्गलाः।

महाजटाभारधरास्तपस्विनस्तदा तमाशीर्व्विधिमन्त्रमङ्गलैः। अभिष्टुवन्तः कश्य खलङ्कृतं बलिं प्रयान्तं रणमूर्द्धनि स्थिता । ११९८०

प्रतप्तजाम्बूनदचित्रभूषणैर्द्दिव्यैश्च रत्नैर्व्विविधैरलङ्कृतः। विराजमानः परमेण वर्चसा रणे विभात्यग्निनिभोऽसुरेश्वरः।

स वै तदा शत्रुबलार्द्दितं बलं बलिर्द्ददर्शोत्तमवीर्य्यविक्रमः। जलागमे श्रीमदिवाभ्रमण्डलं विक्षोभ्यमाणं नभसीव वायुना।

ततो ददर्शाथ बलानि सर्व्वतो रणे सुगुप्तानि शतामनेन वै। समुच्छ्रितान्यप्रतराणि तत्र वै समुद्रवेगानिव पर्व्वसन्धिषु।

स शूलशक्त्यृष्टिगदासिसायकान् क्षिपन्रिपूणां समरे महात्मनां। ननाद सिंहर्षभमत्तनागवज्जलागमे तोयदवच्च वीर्य्यवान्।

दिव्यास्त्रधूमो भुजवेगवायुर्म्महाबलः पौरुषविक्रमेन्धनः। प्रजाक्षयेऽग्निरिव कालवह्निः सुघोररूपो विबभौ रणे बलिः ॥११९८५

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि वामने देवासुरयुद्धे चतुःपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५४ ॥

॥ वैशम्पायन उवाच ॥ बलिना तु सुराः सर्व्वे वर्ज्जयित्वा सुराधिपं। रणे शरशतैर्भिन्ना ससैन्या वै पराजिता।

विमुखा सा तु दैत्येन्द्रैर्व्वध्यमाना महाचमूः। जितास्तु बलिना देवाः शक्रमाहुर्म्महाबलं।

॥ देवा ऊचुः ॥ भवानिन्द्रश्च धाता च लोकानां प्रभुरव्ययः। त्वमप्रतिमकर्म्मा च तथैवानुत्तमद्युतिः।

विद्रुतानीह सैन्यानि सहास्माभिः सुरेश्वर। रथचक्रध्वजाग्र्याणि विभिन्नानि महासुरैः।

रथहस्त्यश्वयोधाश्च पादाताश्च सहस्रशः। भिन्नाश्छिन्नाश्च शतशो गदामुषलपट्टिशैः। ११९९०

महाभैरवरूपं हि दैत्येन्द्रेण कृतं रणे। किमुपेक्षसि दैत्येन्द्रैर्हन्यमानां महाचमूं।

त्रायस्व त्रिदशश्रेष्ठ शरण्य शरणागतान्। श्रुत्वा तु वचनं तेषां देवानाममराधिपः।

सम्वर्त्तकाग्निवत् क्रुद्धः सर्व्वानदहतासुरान्। दिवाकरकराकारं किरीटं धारयन् प्रभुः।

वैदूर्य्योत्करसंकाशो नानारत्नचिताङ्गदः। मयूरग्रामा धूम्रश्च शतबाहुः सहस्रदृक्।

हरिरेको हरिश्मश्रुर्नागकेतुर्म्महाबलः। वज्रप्रहरणः श्रीमान् योगी शतशिरोधरः। ११९९५

सधनुर्बद्धसन्नाहः शतादित्यसमप्रभः। देवगन्धर्व्वयक्षौघैरनुयातः सहस्रशः।

सामगैः सजपैश्चापि स्तूयमानो महर्षिभिः। शतपर्व्वं महारौद्रं स्फोटनं सर्व्वतोमुखं।

प्रगृह्य विततं वज्रं दीप्तं रौद्राट्टहासिनं। दैत्यानयोधयत् सर्व्वान्महेन्द्रः पाकशासनः।

श्रेष्ठः सर्व्वभूतानामदित्या दयितः सुतः। ततः प्रवृत्तः संग्रामो बलेर्द्देवेशस्य च।

उभाभ्यामतिवीर्य्याभ्यां तुमुलो लोमहर्षणः। अतिवीर्य्यबलोदग्रं तुमुलं लोमहर्षणं। १२०००

प्रह्लादेन स्तुतिशतैः कर्म्मभिर्ज्जयशंसिभिः। संबोधितो दैत्यपतिरग्निरिद्ध इवाबभौ।

सुरासुरेन्द्रयोर्द्दृष्ट्वा स्थानं लोमहर्षणं। देवानां दानवानाञ्च भूयो युद्धमभूत्तदा।

ततोऽस्त्रिधन्वेन्द्रस्तु बलिमस्त्रैर्म्महासुरं। तान्यस्त्राणि महाबाहुश्चिच्छेद शतधा बलिः।

ततः क्रुद्धः पुनश्चापि सोऽस्त्रं दुर्व्वारणं महत्। आग्नेयमथ सन्धाय चिक्षेपेन्द्रो महाबलः।

प्रयान्ति समरे भीताः पावकेन पराजिता । न च पश्यन्ति वह्निं ते संप्रदीप्तं महाहवे । ११९८०
दिशः खं गाञ्च मेघांश्च दीप्तान् पश्यन्ति दानवाः । ध्रुवं स्वयम्भुवा सृष्टो युगान्तस्तोययोनिना ।
इत्येवं दानवाः सर्व्वे मेनिरे त्रस्तचेतसः । मयश्च शम्बरश्चैव महामायाधरावुभौ ।
पार्ज्जन्यवारुणी माये व्यधत्तां वारिविग्रहे । ताभ्यां वह्निः स मायाभ्यां सिच्यमानः समन्ततः ।
तोयौघैः पर्व्वतनिभैर्दुर्द्धर्षिरभवद्रणे । शाम्यमानन्तु समरे पावकं दैत्यनाशनं ।
बृहत्कीर्त्तिर्महातेजा वह्निमाह बृहस्पतिः । ११९८५
॥ बृहस्पतिरुवाच ॥ हिरण्यरेतः सुशिख ज्वलनाच्युत सर्व्वभुक् । सप्तजिह्वानल श्याम लेलिहान महाबल ।
आत्मा वायुस्तव विभो शरीरमुत वीरुधः । योनिरापश्च ते प्रोक्ता योनिस्त्वमसि चाम्भसः ।
ऊर्द्ध्वञ्चाधश्च गच्छन्ति सञ्चरन्ति च पार्श्वतः । अर्च्चिषस्ते महाभाग सर्व्वतः प्रभवन्ति च ।
त्वमेवाग्ने सर्व्वमसि त्वयि सर्व्वमिदं जगत् । त्वं धारयसि भूतानि भुवनं त्वं विभर्षि च ।
त्वमग्ने हव्यवाडेकस्त्वमेव परमं हविः । यजन्ते च सदा सन्तस्त्वामेव परमाध्वरे । ११९९०
त्वमन्नं प्राणिनां भुङ्क्षे जग्धपीताशितं विभो । त्वत्तः प्रवृत्तो विजयस्त्वयि लोकाः प्रतिष्ठिताः ।
सृष्ट्वा लोकांस्त्रीनिमान् हव्यवाह प्राप्ते काले त्वं पचस्येव दीप्तः । त्वमेवैकस्तपसे जातवेदो नान्यस्तप्ता विद्यते गोषु देव ।
वृषाकपिः सिन्धुपतिस्त्वमग्ने महामखेष्वप्यहरस्त्वमेव । विश्वस्य भूतिस्त्वमसि प्रसूतिस्त्वञ्च प्रतिष्ठा भगवन् प्रजानां ।
सृजस्यपो रश्मिभिर्जातवेदस्त्वमोषधीरोषधीनां रसांश्च । विश्वं त्वमादाय युगान्तकाले स्रष्टा भवस्यानल सर्गकाले ।
त्वमग्ने सर्व्वभूतानां योनिर्वेदेषु गीयसे । त्वया देवहितार्थाय निहता दानवा रणे । ११९९५
स्वयोनिस्ते महातेजस्तोयं मखशताच्चितं । तत्स्वयोनिं समासाद्य किं विषीदसि पावक ।
त्रायस्व समरे देवान् दैत्येभ्यः सुरसत्तम । युगान्ताभामरारिघ्न विश्वकर्म्मन् सहस्रभुक् ।
पिङ्गाक्ष लोहितग्रीव कृष्णवर्त्मन् हुताशन ।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि वामने देवासुरयुद्धे अग्निस्तवे त्रिपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५३॥
॥ वैशम्पायन उवाच ॥ बृहस्पतेस्तु वचनं श्रुत्वाऽग्निः सत्यनीरितं । भूयः प्रजज्वाल रणे हविषेव महामखे ।
हतास्तु माया दैत्यानां प्रदीप्तेनाग्निना रणे । हतमाया हतबला बलिं ते समुपस्थिताः । १२०००
पराजितेषु दैत्येषु वह्निनाऽद्भुतकर्म्मणा । प्रह्लादस्तु परं वाक्यमाह दैत्यपतिं बलिं ।
भवानाग्निश्च वायुश्च भास्करः सलिलं शशी । भवनानि दिशो व्योम भूश्च दानवसत्तम ।
भविष्यश्चैव भूतश्च भव्यश्चासुरसत्तम । दत्तं हि ते भगवता वरदेन स्वयम्भुवा ।
इन्द्रत्वञ्चामरत्वञ्च युद्धे चाप्यपराजयः । ईशित्वञ्च वशित्वञ्च सत्त्वञ्चैवामितं तव ।
सर्व्वभूतेश्वरत्वञ्च प्रभुत्वञ्च सदा तव । महायोगेश्वरत्वञ्च शूरत्वञ्च महामृधे । १२००५
अमितत्वं लघुत्वञ्च ये चान्ये सात्त्विका गुणाः । तत्पराजय देवेन्द्रं देवान् सर्व्वांश्च सानुगान् ।
यथोक्तं प्रभुणा राजंस्तत्तथा न तदन्यथा । तच्च तद्वचनं श्रुत्वा प्रह्लादस्य महात्मनः ।
बलिः परमसंहृष्टो गतः शक्ररथो हतः ।

ततः प्रयान्तं त्रिदशेन्द्रसन्निधौ महासुरेन्द्रं बलिमुत्तमश्रियं। तमञ्जसा चक्रुरभिप्रदक्षिणं द्विजाश्च मुख्याः प्रयतश्च
मङ्गला.।
महाजटाभारधरास्तपस्विनस्तदा तमाशुर्विविधमन्त्रमङ्गलै.। अभिष्टुवन्त. कस्य. स्वलङ्कृतं बलिं प्रयान्तं रणमूर्द्धनि
स्थिता । ११९८०
प्रतप्तजाम्बूनदचित्रभूषणैर्द्दिव्यैश्च रत्नैर्विविधैरलङ्कृतः। विराजमान. परमेण वर्च्चसा रणे विभात्यग्निनिभोऽसुरेश्वरः।
स वै तदा मद्बलादितं बलं बलिर्द्ददर्शोत्तमवीर्य्यविक्रमः । जलागमे श्रीमदिवाभ्रमण्डलं विकीर्य्यमाणं नभसीव
वायुना।
ततो ददर्शाथ बलानि सर्व्वतो रणे सुगुप्तानि हुताशनेन वै। समुच्छ्रितान्यप्रतराणि तत्र वै समुद्रवेगानिव पर्व्वसन्धिषु।
स शूलशक्त्यृष्टिगदासिसायकान् क्षिपन्निपूणां समरे महात्मनां। ननाद सिंहर्षभमत्तनागवज्जलागमे तोयदवच्च वीर्य्यवान्।
दिव्यास्त्रधूमो भुजवेगवायुर्म्महाबलः पौरुषविक्रमेन्धन.। प्रजादिधक्षन्निव कालवह्निः सुघोररूपो विबभौ रणे बलि.।११९८५
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि वामने देवासुरयुद्धे चतुःपञ्चाशदधिकद्विशततोऽध्यायः॥ २५४ ॥
॥ वैशम्पायन उवाच ॥ बलिना तु सुरा. सर्व्वे वर्ज्जयित्वा सुराधिपं। रणे शरशतैर्भिन्नाः ससैन्या वै पराजिता.।
विमुखा सा तु दैत्येन्द्रैर्व्वध्यमाना महाचमू । जितास्तु बलिना देवा. शक्रमाहुर्म्महाबलं।
॥ देवा ऊचुः॥ भवानिन्द्रश्च धाता च लोकानां प्रभुरव्ययः। त्वमप्रतिमकर्म्मा च तथैवानुत्तमद्युतिः।
विद्रुतानीह सैन्यानि सहास्माभिः सुरेश्वर। रथचक्रध्वजाग्र्याणि विभिन्नानि महासुरैः।
रथहस्त्यश्वयोधाश्च पादाताश्च सहस्रश.। भिन्नाश्छिन्नाश्च शतशो गदामुषलपट्टिशैः। ११९९०
महाभैरवरूपं हि दैत्येन्द्रेण कृतं रणे। किमुपेक्षसि दैत्येन्द्रैर्हन्यमानां महाचमूं।
त्रायस्व त्रिदशश्रेष्ठ शरण्य शरणागतान्। श्रुत्वा तु वचनं तेषां देवानाममराधिपः।
सम्वर्त्तकाग्निवत् क्रुद्धः सर्व्वानदहतासुरान्। दिवाकरकराकारं किरीटं धारयन् प्रभु.।
वैदूर्य्योत्करसङ्काशो नानारत्नचिताङ्गदः। मयूरग्रामा.धूम्राक्ष शतबाहु. सहस्रदृक्।
हरिरेको हरिश्मश्रुर्नागकेतुर्म्महाबलः। वज्रप्रहरणः श्रीमान् योगी शतशिरोधरः। ११९९५
सधनुर्ब्बद्धसन्नाहः शतादित्यसमप्रभः। देवगन्धर्व्वयक्षौघैरनुयात सहस्रश.।
सामगै. सजपैश्चापि स्तूयमानो महर्षिभि.। शतपर्व्व महारौद्रं स्फोटनं सर्व्वतोमुखं।
प्रगृह्य विकृतं वज्रं दीप्तं रौद्राट्टहासिनं। दैत्यानयोधयत् सर्व्वान्महेन्द्रः पाकशासन.।
अथाव्ययः सर्व्वभूतानामदित्या दयितः सुत.। तत. प्रवृत्त. संग्रामो बलेर्द्देवेश्वरस्य च।
उभाभ्यामतिवीर्य्याभ्यां तुमुलो लोमहर्षणः। अतिवीर्य्यबलोदग्रं तुमुलं लोमहर्षणं। १२०००
प्रह्लादेन स्तुतिशतै. कर्म्मभिर्ज्जयसम्मितैः। सवोधितो दैत्यपतिरग्निरिद्धः इवाबभौ।
सुरासुरेन्द्रयोर्द्दृष्ट्वा सङ्ग्रामं लोमहर्षणं। देवानां दानवानाञ्च भूयो युद्धमभूत्तदा।
ततोऽविध्यन्महेन्द्रस्तं बलिमस्त्रैर्म्महासुरं। तान्यस्त्राणि महाबाहुश्चिच्छेद शतधा बलिः।
तत क्रुद्धः पुनश्चान्यदस्त्रं दुर्व्वारणं महत्। आग्नेयमथ शत्रुघ्नं चिक्षेपेन्द्रो महाबलः।

